सम्पन्न एव स्वहितं परहितं च कर्तुं प्रभवतीति समुपदिश्यते व्यष्टिमाहात्म्यस्यैव कल्याणचित्तता, स्रोतआपन्नता, सकृदागामिता, अनागामिता, अर्हत्त्वम्, बोधिचित्तोत्पादः, दानचर्या, शीलचर्या, क्षमाचर्या, वीर्यचर्या, ध्यानचर्या, प्रज्ञाचर्या, बोधिसत्त्वता, बुद्धता चेति विकासपंक्तिः। अस्मिन् व्यष्टिविकासे यद्यपि विविधोच्चसेवातत्परता विविधाधिकारिपदारोहणता वा न गणिता तथापि सा राज्यव्यवस्थाप्रसङ्गे नामनिर्देशमात्रेण कथिता भवित्री। व्यष्टिसामर्थ्यमेव विकासनिमित्तं भवति न जात्यादिकम्। गुणाश्च जातिं न विचारयन्ति (दिव्यावदाने पृ० २४३) इति हि बौद्धसमयः। स्वहितं प्रति पशुरपि न प्रमाद्यति। परहितप्रयत्नपरास्तु ये पुरुषास्ते सुकृतिनः (शिष्यलेखः पद्यं १०१)। व्यष्टिविकासार्थमाचार्यनागार्जुनः प्राह—**क्षान्त्या वीर्येण च भवत्यात्मार्थः, दानशीलाभ्यां सिध्यति परार्थः, मोक्षार्थो ध्यानेन प्रज्ञया च सम्पद्यते इति** (द्रष्टव्या रत्नावली ४।८१)। अस्तु, व्यष्टिविकासो वर्तते बौद्धचिन्ताविषयः।

**(२) समष्टिभावस्याभिनन्दनम्**

तथागतः सङ्घे समष्टिभावरूपे कृतदृष्टिः स महापरिनिर्वाणसूत्रे भिक्षूणां सङ्घस्य च राज्यकृतां सङ्घस्य चेति द्विविधसङ्घस्य समग्रतामभिनन्दति। तयोर्वृद्धिकरान् धर्मान् निर्दिशति। बौद्धधर्मे गुणवानेव सङ्घो वस्तुतः सङ्घो मतः। सङ्घभुक्तो जनः स्थिराशयो भवति चेत् सङ्घोचितो भण्यते। **यश्च कदाचिद् बुद्धश्रावको भवति, कदाचिद् अचेलको भवति, कदाचिद् आजीवको भवति, कदाचिद् निर्ग्रन्थो भवति, कदाचिद् तापसो भवति, एवं रूपो हि यः अनवस्थितचितः पुद्गलः स श्रद्धाविरहितो भवति, अस्थिरविश्वासो भवति, अज्ञो भवति सद्धर्मस्य, न प्रज्ञां परिपूरयति, न तस्य भवति सङ्घे प्रतिष्ठा** (द्रष्टव्यार्थकथा ३।६ धर्मपदगाथायाः)।

सङ्घो गुणवज्जनभूषितो भवेद् इत्यर्थमेव सर्वशिक्षाः सुचरिताचरणाय, दुश्चरितनिवारणाय। प्रमुखेषु दुश्चरितेषु सङ्घभेदोऽन्यतमः। स सर्वथैव परित्याज्यः। तस्यैवाचरणाद् देवदत्तस्य लोके निन्दा प्रसृता। आगमे तस्य निरयगतिर्निर्दशिता। सङ्घो हि तथागतवचनानुसारं कल्याणपरायणानां विदुषां समूहः। स हि **पुण्यम् आकाङ्क्षमाणानां सङ्घो वै यजतां मुखम्** (सूत्रनिपाते शैलसूत्रम्, गाथा २२) इत्येवं भगवता स्तूयते। राज्यकर्तृणामपि सङ्घो भगवदभीष्टः। परं भगवान् यावदभिनिष्क्रमणं शाक्यगणराज्यधुरं युवराजः सन् दधानः परमो भीतोऽप्यासीत्। तेन अल्पोदके यथा मत्स्याः स्पन्दमाना भवन्ति तथैव इमाः सर्वाः प्रजा अन्योन्यं समभिलक्ष्य विरुद्धाचरणा दृष्टाः, अतएव तं भयमाविष्टम्, (द्रष्टव्यमत्र सुत्तनिपाते आत्मदण्डसूत्रम्) इति सूत्रे प्रस्तूयते। किं बहुना, **गुणवतां श्रमणब्राह्मणानां यः सङ्घः, परस्परम् अविरुद्धानां प्रजापालकानां च यः सङ्घः, स द्विविधोऽपि सङ्घो भगवद्बुद्धसम्मतः।** परं सङ्घ-

प्रकाराणामियत्ता नास्ति। दृष्टाः पुरा, दृश्यन्ते चाद्यत्वेऽपि बहवः सङ्घा नानुमतास्ते शिष्टैः सर्वैर्बौद्धाबोद्धैः। तद्यथा चौर-दस्यु-तस्करसङ्घाः सुगुप्ता, सुसंवृताश्च। सन्त्यपरेऽपि राज्याश्रयप्राप्तिमुखेन सर्वत्र विवृताः सङ्घा। तद्यथा, कार्यविरतिप्रेरकाः सङ्घाः, उत्कोचादिग्राहिविविधलोकसङ्घाः, नास्त्यचौरः कविजनो नास्त्यचौरो वणिग्जनः। स सनन्दति विना वाच्यं यो जानाति निगूहितम्। (काव्यमीमांसा पृष्ठं ६१ बड़ौदासंस्करणम्) इति न्यायेन निगूहनपरमपटवो विपणिप्रभूणां वणिजां सङ्घाः। इदं दिग्दर्शनमात्रम्। **मायाजोविनां सर्वे सङ्घा ये लोके प्रचलितास्ते न बौद्धसम्मताः। गुणवज्जनसमष्टिरेव बौद्धानां समष्टिः।** तादृक्समष्टिविकास एव बौद्धविचारविषयः।

### (३) व्यष्टिविकासेऽधिकारिभेदनिरूपणम्

अनन्ता व्यष्टयः। तासां सामान्या शक्तिर्भवति। विशेषा च शक्तिर्भवति। विशेषा शक्तिर्व्यष्टौ भिन्ना भवति। अतः काचन विद्याधर्मादिचर्या न सर्वस्य जनस्य कृते समाना निर्देष्टुं शक्या। तथागतदेशनापि न समाना तत एव सर्वजनानां कृते। आचार्यनागार्जुनः तमिममर्थमभिलक्ष्य तत एव व्याहरति स्म। यथा वैयाकरणः स्वशिष्यान् पूर्वं वर्णमातृकायां विनयति, ततः क्रमेण गूढेषु विषयेषु तान् करोति विशारदान्, एवं तथागतो विनेयजनानां योग्यतां विनिश्चित्य धर्मं देशयति स्म। पापेभ्यो विरमत, इति समुपदिश्य केचन भगवता शिक्षिताः। पुण्यान्याचरत, इति समुपदिश्य केचन धर्ममार्गं प्रति प्रेरिताः। पुण्येषु रतिं पापेभ्यश्च विरतिं शिक्षयित्वा केचन पटवः कृताः। पुण्यपापवर्जितां चर्यां प्रतिपाद्य केचन परिपक्वाः कृताः। करुणाचर्यां शून्यतादृष्टिं च विवृत्य केचन बोध्यर्थं विनीताः। इत्येवं विविधैः प्रकारैः कृता या तथागतदेशना सा चर्यार्थिं लोकानामधिकारिभेदनिरूपणार्थैव (द्रष्टव्योऽत्र नागार्जुनकृतरत्नावलीलेखे चतुर्थो राजवृत्तोपदेशाख्यः परिच्छेदः, तत्रापि श्लोकाः ९४–१००)। अयमर्थः प्रकारेणापरेण विनयपिटकस्य महावर्गे समुपदिष्टः। तद्यथा। भगवान् आनुपूर्वीकथां कथयामास। तद्यथा। दानकथां, शीलकथां, स्वर्गकथां, कामानामादीनवं, नैष्क्रम्ये आनुशंशं प्रकाशयामास। यदा भगवान् अज्ञासीत् श्रोतारं मृदुचित्तं प्रसन्नचित्तम् अथ या बुद्धानां सामुत्कर्षिका धर्मदेशना तं प्रकाशयामास। दुःखं, समुदयं, निरोधं, मार्गं चेति। अस्तु, व्यष्टिविकासार्थं कश्चन विकासक्रमो विकासोपयुक्तजनयोग्यतां दृष्ट्वा कर्तव्यो येन विना काठिन्येन विकासः सम्भवेत्। इत्येष बौद्धो मार्गः सर्वेषां बुद्धिमतां सम्मत एव। भगवांस्तु या या व्यष्टिरिह वर्तते तां तां विषयीकरोत्यप्रमाणैः। सर्वस्य सुखितस्य सर्वदा सुखं तिष्ठतु इति मैत्र्या जनं वेवेष्टि भगवान्। सर्वो दुःखितः भवतु दुःखविवर्जितः—इति करुणया व्याप्नोति जनं भगवान्। सर्वस्य

पुण्यवतः सुखात् न भवतु परिच्युतिरिति मुदितया परिवृणोति जनं भगवान्। सर्वस्य पापोन्मुखस्य पापवृत्तिर्विगच्छतु—इति हितमिच्छन् भगवान् संक्लिष्टं जनं निःसंक्लेशताशयलक्षणया उपेक्षया संस्पृशति भगवान्। एवं व्यष्टिहितमभिलषता जनेन सुखसंयोगाशयतया, दुःखवियोगाशयतया, सुखावियोगाशयतया, हिताशयतया च व्यष्टिं व्यष्टिम् उद्दिश्य प्रवर्तितव्यम्—इति बौद्धसम्मतो मार्गः (द्रष्टव्योऽत्र महायान-सूत्रालङ्कारे चरमोऽधिकारः, तत्र श्लोकः ४३, सप्तदशोऽधिकारः श्लोकौ १८,६२)।

**(४) समष्टिविकासे सङ्घस्य गणतन्त्रराज्यस्य च व्यवस्था**

समष्टिविकासार्थैव भिक्षुभिक्षुणीसङ्घप्रवर्तनं कृतमासीद् भगवता। तत्र सङ्घभुक्तानां जनानां विकासस्य द्वौ मार्गावास्ताम्। ग्रन्थधुरया वा विकासः कर्तव्यः विपश्यना धुरया वा विकासो विधेयः। उभयविधया धुरया यो विकासमवाप्नोति तस्य महती भवत्यर्थवत्ता—इति विनापि वाग्व्याहृतेन प्रकाशयितुं शक्यम्।

जनसाधारणविकासपरिपालनाद्यर्थं गणतन्त्रराज्यव्यवस्था बुद्धकाले जीविता-सीत्। साम्प्रतं सा बहुत्र लब्धप्रचारा। भारतदेशोऽपि तेषामन्यतमः। अस्यां व्यवस्थायां शीलप्रज्ञासम्पन्नानि यदि भवन्त्यधिकारिमण्डलानि तर्हि सर्वं सुस्थमेव विज्ञातव्यम्। अन्यथा तु दारिद्र्येण जनता परिपीडिता भवति तद्यथा साम्प्रतं भारते। भारते शिक्षितवर्गः, अशिक्षितवर्गः, सम्पन्नवर्गः, विपन्नवर्गश्चेति चतुर्विधो जनवर्गः। तेषु अशिक्षितवर्गे विपन्नवर्गे च बहुजनानामन्तर्भावः। सेयं भारतीयगणतन्त्रस्य विफलता। तस्य सफलता तदा भवित्री यदा जनाः साक्षराः सम्पन्नाश्च भवितारः। सर्वविधराज्यसाफल्यस्य सर्वजनसम्पन्नतैव निकषः।

**(५) समष्टि विकासे एकचक्रादर्शः**

सर्वलोकसम्पन्नतैव समष्टिविकासस्य समग्र आदर्शः, एष विषयो दीर्घनिकायस्य चक्कवर्तिसूत्रे विस्तरेणोपपादितः। सिंहलद्वीपे यः कोऽपि विपन्नं राष्ट्रं दृष्ट्वा, विविध-दोषपूर्णं च राष्ट्रं सम्भाव्य किमपि व्याहरति स सूत्रमेतद् उदाहरति। अत्र बौद्धराज्य-तन्त्रादर्शं जिज्ञासुना सूत्रस्यास्य परिशीलनं कर्तव्यम्। इमानि तस्य सूत्रस्य विचार-बिन्दवः। **समग्रपृथिवीमण्डलम् एकमेव भवतु राज्यम्। तदायत्तानि भवेयुर्बहूनि विजितानि लघुमण्डलानि। सर्वेषां दोषाणामेकमात्रं निदानं दारिद्र्यं न तत्र लब्धास्पदं भवेत्। राज्यं च अदण्डेन कृतं स्यात्, अशस्त्रेण कृतं स्यात्, धर्मेण च कृतं स्याद्** इति। तदनुरूपोमहाप्रदेशपत्यादितत्तत्स्थानपतिपर्यन्तोऽधिकारिवर्ग नियोगोऽनिवार्य एव।

एतानि समष्टिविकासकराणि सूत्राणि न भूमौ क्वचिदप्यनुसृतानि। भारते तु कौटिल्यादिभिरेतद्विपरीतानि सूत्राणि निर्माय अर्थशास्त्राख्यया प्रचारितानि राज्य-

कृद्भिः प्रायः सर्वत्रानुसृतानि । तथा दृष्ट्वा नागार्जुनाचार्यस्य मनसि महती पीडा जाता । स स्पष्टमेवाह—

**परातिसन्धानपरा कष्टा दुर्गतिपद्धतिः ।**
**अनर्थविद्या दुष्प्रज्ञैरर्थविद्या कथां कृता ॥**

(रत्नावली २।३०) इति ।

किं बहुना । धर्मराज्यस्यैव त्रयो निकषाः । दारिद्र्योन्मूलनं, अदण्डप्रवृत्ति, अशस्त्रप्रवृत्तिश्च । एतच्चतुस्तत्त्वसमन्विते राजतन्त्रे विकसति हितचेतना । विकसितायां हितचेतनायां कलिमलबहुलानामपि हितं चिन्तयितुं शक्यते । श्रूयते, तथागतो विनीतवान् दस्युम् अङ्गुलिमालम् । बभूव सोऽत्रार्हतामन्यतमः । सेयं करुणा भगवन्निष्ठा । इयं राजनिष्ठापि भवतु । तथा चाह नागार्जुनः—

**हितायैव त्वया चित्तमुन्नाम्यं सर्वदेहिनाम् ।**
**करुण्यात् सततं राजंस्तीव्रपापकृतामपि ॥**
**तीव्रपापेषु हिंस्रेषु कृपा कार्या विशेषतः ।**
**त एव हि कृपास्थानं हतात्मानो महात्मनाम् ॥**

(रत्नावली ४।३१, ३२) इति ।

## (००) विषयोपसंहरणम्

व्यष्टिः समष्टेः परमोंऽशः । सूक्ष्मतमोंऽशः । एकशब्देन संख्यावाचकेन निर्देश्योंऽशः । व्यष्टीनां समुदाय एव समष्टिः । समष्टौ व्यष्टीनामुचितं स्थानं भवेत् । व्यष्ट्यो न पीडामनुभवेयुर्दण्डेन, शस्त्रेण, अधर्मेण, दारिद्र्येण चेति । यदीयं व्यवस्था भवेत् तर्हि समष्टीनां राज्यकर्मपरायणानां वा मतवादपरायणानां वा कोऽपि प्रहारो नैव भवितुं शक्यः । दण्डशक्त्या शस्त्रशक्त्या च सुव्यवस्था नैव लोके भवित्री । दण्डनायकानां सतामपि नगरेषु काचिद् नास्ति सुरक्षा । अर्थापहारः, हिंसामुखेन प्राणापहारः, दुःशीलताप्रसारश्चेत्यादयो दोषा सर्वत्र बहुलीभूता दृश्यन्ते । एतेषां दोषाणां निवारणे दरिद्रा एव राज्यकृतः । यद्यपि नास्ति तेषां वचने दरिद्रता, प्रतिज्ञायां वा दरिद्रता । उक्तार्थकरणे प्रतिज्ञार्थसम्पादने तु भवत्येव दारिद्र्यम् । किं वचसां शौर्येण लोकानाम् । प्रयोजनसम्पादने यदि शौर्यं प्रदर्श्यते तर्हि भवत्येव लोकानां हितं च सुखं च । उपसंह्रियते साम्प्रतं तथागतवचसा—

**सहस्रमपि चेद् वाचो ह्यनर्थपदसंहिताः ।**
**एकमर्थपदं श्रेयः श्रुत्वा यद् उपशाम्यति ॥** (धर्मपद १००)

• • •

# बुद्धदृष्टौ समष्टिः

श्रीसुधाकरदीक्षितः

दर्शनं नाम साक्षात्कारः। कस्य साक्षात्कारः? तत्त्वस्य तत्त्वाधिगमोपायस्य च। किम्पुनस्तत्त्वम्? व्यष्टि-समष्ट्योः कल्याणम्। कल्याणस्यैव श्रेयः निःश्रेयसं वा पर्यायः।

कल्याणस्य तदधिगमोपायस्य च साक्षात्कारः कस्य हृदि भवति? परमकारुणिकस्य। यतः सः परमकारुणिकः, अतएव स्वयं साक्षात् कृतानां तेषां कल्याणाधिगमोपायानां कल्याणसाधकत्वमपि स्वयं साक्षात् करोति, अनन्तरं तान् यथाधिकारं यथायोग्यं सर्वान् समुपदिशति।

उपदेशश्च प्रायशः सत्तर्कारूढो विधीयमानो हृदयस्पर्शी समादरणीयश्च भवति। अतएव व्यष्टि-समष्ट्योः कल्याणोपायानां, समेषां हृदि यथावत् प्रतिष्ठापनाय ये सत्तर्काः परमकारुणिकेन दार्शनिकेन तदनुयायिभिश्चाश्रीयन्ते, ते तत्प्रतिपादका ग्रन्थाश्च दर्शनपद्भाजो भवन्ति।

अनेन उपरितनसंक्षेपेण मन्ये तथ्यमिदं स्पष्टं स्यादेव यद् दर्शनं तदेव यद् व्यष्टि-समष्ट्योः कल्याणमेवालक्ष्याविर्भवतीति। एतेन हि दर्शनस्य व्यष्टि-समष्टिभ्यां न केवलं घनिष्टः सम्बन्धः स्पष्ट्यते अपि तु तयोः परमोपकारकत्वमेव तस्य स्वरूपमित्यपि स्फुटं भवति। अतएव यद् दर्शनरूपेण प्रथितं व्यष्टि-समष्ट्युपकारकं नास्ति अथवा वस्तुगत्या तयोः उपकारकं सदपि तेन रूपेण नोपयुज्यते तस्य स्वस्मिन् रूपे यथावत् प्रतिष्ठापनं तद्सम्भवे च जगतो बहिः निष्कासनं नितरामनिवार्यमिति मम प्रतिभाति।

**व्यष्टि-समष्टिस्वरूपम्**

अधुनेदं विचारणीयम्—का व्यष्टिः समष्टिर्वा? तत्र समष्टिनिरूपणायत्त व्यष्टि-निरूपणम्। समष्टिश्च मानवानां समूह इति वक्तुं युक्तम्, परं समूहविशेषः समष्टिः, न तु समूहसामान्यम्। समूहस्य वैशिष्ट्यं हि उद्देश्यविशेषमाश्रित्य। तच्चोद्देश्यं मानवानामस्तित्वस्य विश्वतोमुखस्य विकासस्य च सम्पादनम्। उद्देश्येनानेन पारस्परिकं प्रेम सहानुभूतिं चाधारीकृत्य अनिवार्यरूपेण अपेक्षितः अयं समूहः समष्टिः समाज इति वा अभिधीयते। अतएव इयं समष्टिः मानवजातेः एको विस्तृतो विशालश्च परिवार एवेति निश्चप्रचम्। अस्याः समष्टेः यत् प्रमुखं घटकं तदेव व्यष्टिरिति स्पष्टम्। तच्च मानव एवेति अनुपदोक्तदिशा निर्विवादम्।

यथा व्यष्टेः अस्तित्वं सर्वाङ्गीणो विकासश्च समष्ट्यायत्ते तथैव समष्टेः अस्तित्वं सर्वाङ्गीणो विकासश्चापि व्यष्ट्यायत्तं इति सर्वानुमतमेव। परस्परं सापेक्षयोः अनयोः व्यष्टि-समष्ट्योः सत्तायाः अविच्छिन्नरूपेण प्रवाहशीलत्वं समप्राधान्यं समकालभावित्वं चेति नितरां स्पष्टम्, व्यष्टेरपि मातृ-पितृसमूहात्मकसमष्टेरेव जायमानत्वात्।

**व्यष्टेरपि समष्ट्यात्मकत्वम्**

समष्टिरपि व्यष्टिः व्यष्टिरपि समष्टिः, अनेकस्मिन्नेकोपलब्धेः एकस्मिन्ननेकोपलब्धेश्च सिद्धान्तात्। पुरो दृश्यमानेषु स्तम्भभित्त्यादिषु अनेकेषु अङ्गेषु एकमिदं भवनमुपलभ्यते, एकस्मिन् चास्मिन् भवने इमानि अनेकानि स्तम्भभित्त्यादीनि अङ्गानि उपलभ्यन्ते। वस्तुगत्या नहीदं भवनं किञ्चिदेकं वस्तु, किन्तु स्वीयानि अङ्गानि गुण-विशेषांश्चाश्रित्यैव भवनमिति ख्यातिं भजते। इयमेव स्थितिः मानवात्मिकाया व्यष्टेरपि। तस्या अपि नास्ति काचन शुद्धसत्ता किन्तु मानसिकीनां भौतिकीनां च तासाम् अवस्थानां सा समुदायमात्रम्, याः उत्पाद-स्थिति-भङ्गानाम् अविच्छिन्नधारासु प्रवहमानाः सन्ति। इमा मानसिक्य अवस्था एव **'नाम'** शब्देन भौतिक्यश्चावस्थाः **'रूप'** शब्देन व्यपदिश्यन्ते। नाम्न एव तिस्रः स्थितयः वेदना, संज्ञा, संस्काररूपेण प्रसिद्धाः सन्ति। पापपुण्यादिविभिन्नप्रकारकं चित्तमेव 'विज्ञान' रूपेण प्रथितम्। आसाम् अवस्थानां समुदायस्य समुदाय एव मानवात्मिका व्यष्टिः। अयम् अवस्थानाम् समुदाय एव पञ्चस्कन्धरूपेण प्रसिद्धः–रूपस्कन्धः, वेदनास्कन्धः, संज्ञास्कन्धः, संस्कार-स्कन्धः, विज्ञानस्कन्धश्चेति। तथा हि संयुक्तनिकाये—

**'यथा हि अङ्गसम्भारा होति सद्दो रथो इति।**
**एवं खन्धेसु सन्तेसु होति सत्तोति सम्मुति'ति ॥**

**अस्यायमाशयः**

यथा चक्रादिषु विभिन्नेषु अङ्गेषु एव रथ इति ख्यातिस्तथैव पञ्चसु स्कन्धेष्वेव व्यक्तेः ख्यातिः। एवं व्यष्टिरपि समष्टिरेवेति सुव्यक्तं भवति। तेन च परमार्थतः समष्टिरेव सर्वस्वमिति स्थिते सति समष्टिकल्याणमेव बुद्धदर्शनस्य लक्ष्यमिति पर्यवस्यति।

**समष्टिकल्याणम्, बुद्धत्वम्, करुणा च**

अस्याः समष्टेः कल्याणस्य वासना एव परार्थवासना। इयं हि परार्थवासना शुद्धवासना इत्युप्युच्यते। इयमेव बोधिसत्त्वस्य विशिष्टं लक्ष्यम्। अनया वासनया अनुप्राणित एव बोधिसत्त्वः क्रमशस्तद् बुद्धत्वमधिकरोति, यत्र व्यक्तित्वस्य विलयेन सार्द्धमियं शुद्धवासनापदाभिधेया परार्थवासनापरपर्याया समष्टिकल्याणभावना एव सर्वस्वं भवति। इयं समष्टिकल्याणभावना बुद्धे तथा आत्मसाद् भवति यथा सः

एकतस्तु आत्मनो व्यक्तित्वं समष्ट्यात्मकं सम्पाद्य तिष्ठति अन्यथा स्वाभाविक्याः समष्टिकल्याणभावनाया एवासम्भवात्, अन्यतश्च प्रतिक्षणं तथा प्रयतते येन तस्य स्कन्धनिवृत्तिः शीघ्रं न स्यात्, स्कन्धनिवृत्तौ सत्यां समष्टिसेवाया अवसरस्य लब्धुमशक्यत्वात्। इदमेव बुद्धस्य बुद्धत्वम् असाधारण्यं च।

इमामेव परमस्पृहणीयां समष्टिकल्याणभावनाम् आलक्ष्य बौद्धा योगिनः तादृशं बैन्दवं सिद्धं वा देहं कामयन्ते, यः प्राकृतनियमानां शृङ्खलया न बद्धयते, नापि मृत्युना ग्रस्यते। अत एव तं देहमाश्रित्य यथाकामं यत्र कुत्रापि विचरन्तस्ते सुदीर्घकालं यावत् समष्टिकल्याणसम्पादने समर्थाः भवन्ति। अमुं देहविशेषं तदैव बौद्धयोगी सङ्कोचयति यदा समष्टिगतानां तृष्णानाम् अशेषक्षयं सम्पाद्य तांश्च समष्टिं महानिर्वाणपथे महापरिनिर्वाणपथे वा सुदृढं संयोज्य सिद्धप्रयोजनो भवति।

इयं हि समष्टिकल्याणवासना यया करुणया सम्भवति सा हि साध्यकरुणारूपेण बुद्धजगति प्रथिता विद्यते, बुद्धदृष्टौ अस्या एव करुणाया चरमलक्ष्यत्वात्। इयमेव करुणा तत्र भवति भगवति बुद्धे प्रमाणमिति **धर्मकीर्तिः** प्रमाणवार्त्तिके स्पष्टयति—**'करुणावत्त्वात् भगवान् प्रमाणमिति'**।

अस्या एव **'दुःखाद् दुःखहेतोश्च समुद्धरणकामता करुणा'** इति रूपेण **मनोरथनन्दिः** स्वरूपं वर्णयति। इयं करुणा समष्टिगतदुःखसन्तानसंस्पर्शमात्रेण समुदेति। अतएव **धर्मकीर्तिः** प्रतिपादयति—

**"दुःखसन्तानसंस्पर्शमात्रेणैव दयोदयः"** इति।

दुःखेषु सम्मुखं प्रस्तुतेषु सत्सु तेषामेव महापुरुषाणां हृदि करुणेयम् उत्पद्यते, ये नैरात्म्यदर्शनस्वभावाः सन्ति, आत्मदृष्टेरेव मोहं प्रति मूलकारणत्वात्, मोहस्य द्वेषं प्रति, द्वेषस्य च दुःखं प्रति कारणत्वस्य सुस्पष्टत्वाच्च। स्वभावतः नैरात्म्यदर्शने सुप्रतिष्ठिते कश्चन् माम् अपकरिष्यतीति भ्रमस्य अभावः स्वाभाविकः, तेन च द्वेषाभावः स्वतःसिद्धः, ततश्च अशेषदुःखोच्छेद अपरिहार्यः। एतेनेदम् स्पष्टम्—इयं साध्यभूता करुणा दोषाणां मूलकारणभूतायाः आत्मदृष्टेः अभावेन दुःखसन्तानस्पर्शमात्रेण च जायमाना न सत्त्वानुरोधिनी किन्तु करुणाविषयस्य दुःखात्मकस्य वस्तुनः धर्मभूता, अत एव न कदापि दोषाय भवति। यथा च **धर्मकीर्त्तिः**—

**"दुःखज्ञानेऽविरुद्धस्य पूर्वसंस्कारवाहिनी।**

× × ×

**वस्तुधर्मा दयोत्पत्तिर्न सा सत्त्वानुरोधिनी॥"** इति।

एवंविधया करुणया उपेता हि महापुरुषाः, अकारणवत्सलाः उपकारसाधने एव सततं निरतचित्ताः नूनं कृपामयाः करुणामया वा। इमे हि महापुरुषाः वस्तुगत्या

अपराधीना अपि समष्टिकल्याणे एव प्रतिक्षणं निमग्नचित्ताः समष्ट्यधीनतायामेव परमनिर्वाणसुखम् अनुभवन्ति। तथा च धर्मकीर्त्तिः—

**"तिष्ठन्त्येव पराधीना येषां तु महतीकृपा।**
**परार्थवृत्तेः खड्गादेर्विशेषोऽयं महामुनेः॥"** इति

एवम्भूताः कृपामया महामुनय एव सम्यक् सम्प्रबुद्धा इत्यप्युच्यन्ते। अस्याः करुणायाः साधनमपि करुणा एव। सा हि साधनभूता करुणा, श्रमणेषु प्रत्येकबुद्धेषु उपलभ्यमाना सत्त्वावलम्बना भवति, अर्थात् सत्त्वानां दुःखदुःखत्वं परिणामदुःखत्वं च अवलम्ब्यैव इयं करुणा एषूत्पद्यते।

अनेन उपरितनसंक्षेपेण अहमिदमेव स्पष्टयितुमिच्छामि यत् समष्टिकल्याणमेव बुद्धदर्शनस्य लक्ष्यम्। समष्टेश्च क्षेत्रं बुद्धदृष्ट्या अतीवव्यापकम्। तदीयं यद् दार्शनिकं तथ्यं तदनुरोधेन व्यष्टिरपि समष्टिरूपैव, किम्बहुना यावत्पर्यन्तं व्यष्टिः नात्मानं समष्टि मनुते तावत् पर्यन्तम् अपूर्णैव सा। तस्याः पूर्णत्वम् स्वस्मिन् समष्टिभावनायाः प्रतिष्ठापनेनैव सम्भवति। अतएव बुद्धदृष्ट्या समष्टिमपेक्ष्य व्यष्टिव्यवहारः सांवृतिकसत्तामाश्रित्य स्यान्नाम, स्याच्च तस्याः व्यष्टिरूपेण संरक्षणं पोषणं च, परं पारमार्थिकसत्तादृष्ट्या समष्टेरेव सर्वस्वभूततया व्यष्टेः व्यष्टित्वरूपेण नास्ति किञ्चित् स्वीयम् अस्तित्वम्। इदमन्यद् यद् व्यष्टित्वेन व्यष्टेः प्रतीतौ सत्यामेव तदपेक्ष्य समष्टिरिति व्यवहारसम्भवेन समष्टित्वेन समष्टेरपि नास्ति परमार्थतः अस्तित्वम्, परं वस्तुगत्या स्वलक्षणात्मिका सा विद्यत एव। मन्ये भगवतो बुद्धस्य नैरात्म्यदर्शनमिदमेव स्पष्टयति।

## बुद्धदर्शने सामाजिकव्यवस्था

एवं बुद्धदृष्ट्या व्यष्टि-समष्टिस्वरूपे तयोः परस्परं सापेक्षत्वरूपे पूरकत्वरूपे वा सम्बन्धे स्फुटे सति विकासस्तयोः कथमिति विविच्यमाने स्थितस्य सम्पुष्टस्य च विकासश्चिन्तनीयो भवतीति दिशा पूर्वं व्यष्टि-समष्ट्योः स्थितिसम्पुष्टी कथं सम्भवत इति चिन्तनीयम्। वस्तुतः एतदुभयं समुचितव्यवस्थायत्तम्। समुचितव्यवस्थाया निर्धारणं च न दर्शनस्य प्रमुखो विषयः। दर्शनं हि तादृशव्यवस्थायै अपेक्षितं मूलभूतम् सिद्धान्तं संकेतयन् व्यष्टिसंशोधने एव सुदृढं यत्नमातिष्ठति। यत्नेनानेन भावनात्मिकाया एकतायाः सुप्रतिष्ठापनपुरःसरं व्यष्टित्वेन व्यष्टौ क्षुद्रस्वार्थसाधनदृष्टेः सर्वात्मना विरहं सम्पाद्य दर्शनं कृतकृत्यं भवति। बुद्धदर्शनेन सङ्केतितः सिद्धान्तश्चायम् तृष्णायाः अशेषक्षयस्यैव। एतेन हि सैव समाजव्यवस्था उपादातुं योग्या यस्याः परमं फलं तृष्णाया अशेषक्षय एव स्यादिति सङ्केतो लभ्यते। तेन हि तृष्णया तृषितैः विधीयमाना कापि व्यवस्था पर्यवसाने दोषफला एव भवति, अतः सर्वदोषमूलायाः तृष्णायाः

परित्यागपुरःसरं समष्टिगताः सर्वा अपि व्यवस्थाः केवलं कर्त्तव्यबुद्धया विधेया इति निर्गलति।

अहन्त्विदं मन्ये, येयं वर्णाश्रमव्यवस्था सामाजिकव्यवस्थारूपेण प्रसिद्धा, तया सार्द्धं नास्ति कोऽपि विरोधः भगवतो बुद्धस्य। यद्यपि सुन्दरिकभरद्वाजसूत्रस्य आश्वलायनसूत्रादिकस्य च अवलोकनेन व्यक्तमिदम्—भगवान् बुद्धः जातिदृष्ट्या कस्यचन गरीयस्त्वं कनीयस्त्वं वा न मनुते, किन्तु सदाचरणदृष्ट्यैव तत् मनुते; परं नैतावता वर्णाश्रमव्यवस्थां सः खण्डयति तिरस्करोति वा अपितु सद्ब्राह्मणान् प्रशंसत एव।

वस्तुगत्या बुद्धः सदाचरणस्य वैशिष्ट्यं मन्वानः सदाचरणशीलमेव सर्वोच्चं मनुते। सदाचारस्योत्कर्षश्च व्यक्तित्वस्य समष्टौ सर्वात्मना लयेनैव निर्धार्यते। यदि हि वर्णाश्रमव्यवस्था कदाचित् निरंकुशरूपेण अमर्यादितरूपेण वा व्यष्टेः पदस्य वा महत्त्वख्यापने तयोः दुरुपयोगे वा पर्यवस्यति, तर्हि नूनं सा दोषाय स्यात्; परं नेदं कथमपि वर्णाश्रमव्यवस्थाया लक्ष्यम्। बुद्धः कामयते वर्णाश्रमव्यवस्थायास्तदेव रमणीयं स्पृहणीयं वा स्वरूपं यत्र व्यष्टिपदं वापेक्ष्य सदाचरणमेव सर्वोत्कर्षेण विराजेत। अतएव सः वर्णाश्रमव्यवस्थायाः विकल्परूपेण काञ्चन अन्याम् सामाजिकीं व्यवस्थां न निर्दिशति, प्रायशस्तु सः एवंविधेषु बहुविधेषु लौकिकेषु प्रश्नेषु मौनमेवावलम्बते।

बहूनां तु सूक्ष्मेक्षिकया तत्त्वं परिशीलयताम् इदं मतम्—बौद्धजैनमतानुयायिनो विद्वांसः सामाजिकीं व्यवस्थां वर्णाश्रमानुरोधिनीमेवानुमन्यन्ते। अत एव शङ्कराचार्य-सोमदेवसूरिप्रभृतिभिः जयमङ्गलानीतिवाक्यामृतादिषु वर्णाश्रमव्यवस्था तथैव स्वीक्रियते यथा कामन्दकीयनीतिसार-कौटिलीयार्थशास्त्रादिषूपलभ्यते। आयुर्वेदीय-चिकित्सापद्धतिः विशेषतस्तदीयरसरसायनादिसिद्धिपद्धतिश्च बुद्धपरम्परायामपि यथावत् स्वीक्रियते, सा च वर्णाश्रमव्यवस्थामुपेक्ष्य नानुसर्तुं शक्यते नापि तया यथापेक्षमिष्टं फलं लब्धुं शक्यम्। अतः समाजं परिचालयितुं व्यवस्थापयितुं च वर्णाश्रमव्यवस्था स्वीयेन यथार्थस्वरूपेण नूनमभ्युपेया बौद्धजैनादिभि इति।

समष्ट्ये सर्वात्मना समर्पणबुद्धया वर्णाश्रमव्यवस्थामाश्रित्य नूनं समाजस्तथा व्यवस्थापयितुं शक्यते यथा सर्वं समञ्जसं स्यादिति मम सुदृढो विश्वासः। यथाऽधुनापि व्यवहारे मर्यादापरिपालनाय अस्माभिः व्यक्तिः सम्मान्यते, व्यक्तिश्चात्मानं सर्वात्मना अस्मासु समर्पयति। अस्माभिः पदं सम्मान्यते, पदे विद्यमानश्च जनः तदनुरूपं त्यागं सन्तोषम् आर्जवादिकञ्च स्वायत्तीकृत्य आत्मन औदार्यं प्रकामं समाजानुगुणं विकासयति, अन्यथा परस्परं दोषमात्रदर्शने सर्वं विप्लुतं भवत्येव। तथैव सर्वत्रापि अपेक्ष्यते इति वयम् अनुभवाम एव।

**बुद्धस्य समष्टिसंशोधनपद्धतिः**

बुद्धः परमकल्याणस्य बहून् उपायान् संकेतयन् स्वर्गं कामयमानान् गृहस्थान् प्रति शीलं शिक्षयितुं प्रथमतस्त्रिशरणगमनविधिं संकेतयति—**'बुद्धं शरणं गच्छामि, धर्मं शरणं गच्छामि, सङ्घं शरणं गच्छामी'ति।** अत्र त्रिरत्ने प्रथमं रत्नं व्यष्टेः शरणं प्रति गमनमेव; तदेव सम्भवदुक्तिकमपि। इदमन्यद् यत् सैव व्यक्तिः शरणीकर्तुं शक्यते या स्वीयं व्यक्तित्वं समष्टौ विलापयति। अत एवात्र 'बुद्धं शरणं गच्छामी'त्युच्यते न तु व्यक्तिं शरणं गच्छामीति। अनन्तरं 'धर्मं शरणं गच्छामी'ति द्वितीयं रत्नम्। इदं हि 'सङ्घं शरण गच्छामी'ति तृतीयरत्नस्य पूर्वं निर्दिष्टमस्ति। अत्र 'धर्म' इत्यनेन बुद्धत्वावाप्त्यै उपयुक्ता एव धर्मा इष्टा इति नूनं मन्तव्यम्; तेनेदं सुस्पष्टम्, यद् व्यष्टि-समष्ट्योः मध्ये सुदृढं फलाधायकं सम्पर्कसूत्रं बुद्धकारकधर्म एव; तस्य शरणं गतः समष्टेः शरणं स्वभावतो गच्छत्येव। समष्टिं प्रति गमनं नाम तस्यामात्मनः समर्पणमेव, तदेव च बुद्धदृष्ट्या मुख्यं लक्ष्यम्।

अस्यैव त्रिरत्नस्य कल्याणार्थम् अपेक्षितस्य यथावत् सम्पत्तये पञ्चशीलमपि गृहस्थम् प्रत्युपदिश्यते। तच्च—१. प्राणातिपातविरतिः, २. अदत्तादानविरतिः, ३. कामनियमाचारविरतिः, ४. मृषावादविरतिः, ५. सुरामैरयप्रमादस्थानविरतिः इति।

एवमेव प्राचीनेषु पालिसाहित्येषु ब्रह्मविहारनाम्ना चतस्रो वृत्तयः मैत्री-करुणा-मुदितोपेक्षारूपाः प्रसिद्धाः सन्ति। नूनमासां वृत्तीनां व्यष्टि-समष्ट्योः मध्ये अपेक्षितस्य प्रशस्ततमस्य स्पृहणीयस्य सम्बन्धस्य स्थापने तयो सम्पुष्टौ विकासे चानितरसाधारणः उपयोगः विद्यते। येन व्यष्टिसंशोधनपुरःसरं समष्टिगतसुव्यवस्थाया एको विशिष्टः प्रकारः अनितरसाधारणः भगवता बुद्धेन स्वीकृतः प्रसङ्गान्तरेण स्पष्टो भवति। प्रसङ्गश्चायम् चारिकायाः वर्षावासस्य प्रवारणायाश्च विद्यते। भगवान् बुद्धः भिक्षुभिः सार्धं चारिकाम् अनुतिष्ठति स्म। तत्र भिक्षूणां सन्देहजातं निवारयन् सः तेभ्यो नियमान् अशिक्षयत्। गृहस्थान् प्रत्यपि प्रश्नप्रतिवचनपूर्वकं धर्मान् निरदिशत्। वर्षर्त्तौ केनचन उपासकेन वर्षावासार्थं निमन्त्रितास्ते भिक्षवः चारिकाम् इमाम् अवरोध्य एकत्र अवतिष्ठन्ते स्म। उपासका गृहस्थास्तत्र तेषां भिक्षादिकं व्यवस्थापयन्ति स्म, भिक्षवश्च तेभ्यो धर्मान् उपदिशन्ति स्म। एवं व्यष्टि-समष्ट्योः सम्बन्धान् द्रढयन् भगवान्बुद्धः तयोः विकासस्य प्रशस्तं मार्गं परिष्कारयामास।

वर्षर्तोः पर्यवसाने तत्र एकः समुत्सवः समायोज्यते स्म। तत्र समवेतान् समान् भिक्षून् उपासकांश्च एको भिक्षुः धर्मोपदेशेन अनुगृह्णाति स्म। तस्मिन् हि उपदेशदिने सर्वेऽपि उपोषिता एवाविद्यन्त। अनन्तरं सायम् एकं विशिष्टं सम्मेलनं समायोज्य तत्र परस्परं पापप्रकाशनम्, तस्य स्वीकरणम्, तादृशस्य पापस्य पुनः अननुष्ठानादि-

प्रतिज्ञाकरणं विधाय भिक्षवः स्वीयं व्यक्तित्वं शोधयन्ति स्म। सर्वान्ते च अत्यर्थं विशुद्धेभ्यस्तेभ्यो भिक्षुभ्यः उपासकैः गृहस्थैः आनीतानि जीवनोपयोगीनि वस्तूनि वितीर्यन्ते स्म। अयं प्रवारणायाः उत्सवः प्रति पञ्चमे वर्षे यया परिषदा समायोज्यते स्म, सा पञ्चवार्षिकी परिषदिति नाम्ना बुद्धजगति प्रसिद्धिमभजत्। इयं परिषत् कदाचित् 'खाश' नाम्ना विख्यातेन राज्ञापि समाकारिता आसीत्। तत्र च तेन राज्ञाऽपि स्वीयं सर्वस्वं समष्ट्ये वितीर्य इदं निदर्शनम् उपस्थापितं यद् कीदृशो राजा प्रजानुरञ्जने समर्थो भवतीति। ह्वेनत्साङ्गः अपि कूचायां वामियाने चामुम् उत्सवम् अवालोकयत्। कदाचित् चीनदेशस्य महाराजोऽपि पञ्चवार्षिकीम् इमां परिषदं निमन्त्रयामास।

प्रसङ्गश्चायं स्पष्टयति—संग्रहः, परोक्षे निषिद्धाचरणं प्रत्यक्षे चात्मनः समक्त्व-प्रकाशनं च विघटनस्य भेदबुद्धेर्वा मूलं कारणम्। इदमेव सर्वं यदि नानुष्ठीयते कदाचिद् बलात् अनिच्छया अनुष्ठीयतापि परं काले काले यदि संग्रहः वितीर्यते निषिद्धाचरणं च प्रकाश्यते त्यज्यते चेद् व्यष्टि-समष्ट्योः प्रशस्ततरमसम्बन्धस्थापनपुरःसरं तयोः विकासः अपरिहार्यः।

यद्यपीदं सर्वमन्यत्रापि धार्मिकवाङ्मये समुपलभ्यते, परं समूहे स्वीयपापप्रकाशन-पुरःसरं व्यक्तित्वसंशोधनप्रकारः कार्यरूपेण परिणतः भगवतो बुद्धस्य चरित्रे समुप-लभ्यमानः पाखण्डात् प्रमादाच्चास्मान् रक्षितुं बद्धपरिकरस्य भगवतो बुद्धस्यानितर-साधारणं वैशिष्ट्यम् अवद्योतयति। प्रकारममुम् अनुष्ठातुं यादृग् विशालं व्यक्तित्व-मपेक्ष्यते तस्य निर्माणाय भगवतो बुद्धस्यादर्शाः नूनमस्माभिः समादरणीया इति विशेषतः अवधानविषयः।

मम तु इदमेव प्रतीयते—भगवान् बुद्धः नूनं समष्टिमेव सर्वस्वं मनुते। तस्य कल्पनायां व्यक्तित्वं सङ्कोचशालि, परं तद् व्यापकं सत् करुणायै उपयुज्यत एव। तस्य व्यापकत्वं हि समष्टौ व्यक्तित्वस्य विलयेनैव सम्भाव्यते। एतेन हि समष्टिभावना एवान्तिमं लक्ष्यं बुद्धदर्शनस्य इति स्पष्टं भवति। अन्यत्र हि अस्माकं वाङ्मये वेदान्ता-दिषु समुपलभ्यमानानां तत्त्वचिन्तकानां कल्पनायां व्यक्तित्वमेव स्वभावतः अतीव व्यापकम् आकस्मिककारणवशेनैव तत् सङ्कुचति। तस्य हि आकस्मिककारणस्य निरासपुरःसरं व्यक्तित्वं स्वाभाविके स्वीये रूपे प्रतिष्ठाप्यते चेत् पृथक् समष्टेः अस्तित्वम् अलीकमेव भवति। तेन हि व्यक्ति एव सर्वस्वमिति स्पष्टं जायते।

उभयविधायां दृष्टौ मूलभूतं तथ्यमेकम्। विश्वशान्त्यै सङ्कोचभाव अन्तरायः, व्यापकता विशालता वा अनिवार्यं तत्त्वम् इति। व्यष्टिः समष्टिर्वा भवतु प्रधानं, तस्या सङ्कोचो मास्तु। तस्याः विशालतमत्वं सम्पादयितुं यत्नाः अनुष्ठेयाः। तेन हि नूनं यथापेक्षं सुखं शान्तिश्चासाद्य समग्रं जगत् स्वस्थं भविष्यतीति यथामति निवेद्य विरमामि।

● ● ●

# समकालीनभारते व्यष्टि-समष्टिसम्बन्धानां दिशा

**प्रो० कैलासनाथ शर्मा**

यद्यपि व्यक्तेः समाजस्य च सम्बन्धेषु दर्शनेतिहाससमाजशास्त्रदृष्ट्या विचारः कर्तुं शक्यते तथापि केवलं व्यावहारिकं पक्षमवलम्ब्य स्वविचारान् प्रस्तौमि विश्वसिमि च एतद् गोष्ठीभाजोऽन्ये विद्वांसः **दर्शनसमाजशास्त्रपक्षयोः** विश्लेषणमूल्याङ्कने प्रस्तुतीकरिष्यन्ति ।

आपञ्चमदशकाद् भारते आर्थिकविकासाय पञ्चवर्षीयाः योजनाः समारब्धाः सन्ति । आसां योजनानां मूलभूतं धारणाद्वयं विद्यते । आद्या धारणा इयमस्ति—यावता अनुपातेन देशस्य अर्थव्यवस्थायां आर्थिको विनियोगः वर्द्धिष्यते, प्रायः तावता अनुपातेनैव आर्थिको विकासः सम्पत्स्यते । अपरा धारणा इयमस्ति--आर्थिकविनियोगविकासयोः माध्यमाः सामाजिकसंस्थाः सङ्गठनानि च भविष्यन्ति । यदि संस्थानां सङ्गठनानां च प्रवर्तमानरूपाणि सन्तोषप्रदानि न सन्ति, तदा तानि देशान्तरात् उपलब्धुं शक्यन्ते । पाश्चात्यदेशाः आर्थिकदृष्ट्या सफलाः समर्थाश्च मन्यन्ते । अतः तेषाम् आर्थिकसफलतायाः रहस्यम्—तत्संस्था-संगठनानाञ्च विशिष्टरूपान्येव सन्ति इति स्वीक्रियते । अतः प्रायः विकासशीलदेशेषु ईदृक्षानां संस्थासङ्गठनानामायातं द्रुतगत्या अभवत् । यदा इमानि संस्थासङ्गठनानि लक्ष्यपूर्तौ असफलानि भवितुं प्रवर्तन्ते तदा इदं कथ्यते यत् पूँजीवादिसंस्थासङ्गठनापेक्षया साम्यवादिरूसचीनादिदेशस्थसंस्थासङ्गठनानाम् आयातं स्यात् । प्रायः इदमपि कथ्यते यद् एशियामहाद्वीपान्तर्गतजापानदेशः आर्थिकदृष्ट्या फले ग्रहिः देशः अस्ति, अतः जापानीयसंस्थासंगठनानाम् आयातम् उपयोगि भविष्यति । यदि कदापि भारतदेशस्य आर्थिकविकाससम्बन्धिनां संस्थासङ्गठनानाम् इतिहासो लेखिष्यते तदा एतत्प्रतिक्रियामूलाधाराणां संस्थासङ्गठनानां स्वरूपं तद्विकासश्च चित्रीकरिष्यते ।

संस्थानां सङ्गठनानां च अनेके प्रयोगाः अभूवन्, परन्तु आर्थिकविकासस्य गतिः ऊर्ध्वगामिनीं स्थिरतां प्राप्तुं नाशकत् । आर्थिकविकासस्य प्रयत्नैः सह आर्थिकेषु राजनीतिकेषु च क्षेत्रेषु भ्रष्टाचारः उत्तरोत्तरं वर्धिष्णुः दृश्यते । शासकीयसङ्गठनेषु अनुशासनहीनता वृद्धिगता, स्वकर्तव्यानि प्रति च आस्था हीयमाना वर्तते । कस्मिंश्चिदपि कार्यालये सामान्यतः यथासमयं कार्यं न भवति, प्रायः कार्याणि सम्पादयितुं उत्कोचस्य आश्रयः, अथवा तादृशानां सामाजिकसम्बन्धानामाश्रयः स्वीक्रियते, ये

कर्मचारिणां स्वार्थपूर्त्यै निर्मीयन्ते। सार्वजनीनक्षेत्रे सर्वेषु औद्योगिकसङ्गठनेषु अयं रोगः पूर्णतः व्याप्तो दरीदृश्यते। समाजवादोद्घोषेण अधिकाधिकं सङ्गठनानि सार्वजनीनक्षेत्रे आनीयन्ते, परन्तु तानि सर्वाणि सार्वजनीनहितपूर्त्यपेक्षया वैयक्तिकहितपूर्तौ साधन-विशेषतया उपयुज्यन्ते।

आभिः समस्याभिः सहैव अस्माभिः राजनीतिकभ्रष्टाचारात् (दलबदलसे) संस्थासदस्यतापरिवर्तनाच्च उत्पन्नायां राजनीतिकास्थिरतायाम् उद्देश्यहीनतायां च विचारः कर्तव्यः। यतोहि राजनीतिकास्थिरता समष्टेः हितभावनायाः अभावश्च शासकीयसङ्गठनानाम् अराजकतां भ्रष्टाचारं च वर्धयति अवरुणद्धि च आर्थिकविकासम्। लोकसभासदस्यानां निर्वाचनम् इदानीमेव सम्पन्नं वर्तते। इदं सर्वमान्यं तथ्यम्, यद् इमानि निर्वाचनानि भ्रष्टाचारमूलानि। निर्वाचने कलहायमानाः प्रत्याशिनः संस्थाश्च निर्वाचनाडम्बरे व्ययार्थं धनानि कुतः प्राप्नुवन्ति ? केचन केन हेतुना धनानि एभ्यो ददति। एवं विधानां प्रश्नानामुत्तराणि नाज्ञातानि बुद्धिमताम्। ये धनपतयः निर्वाचने प्रत्याशिभ्यो धनं प्रयच्छन्ति, तेऽवश्यं सांसदेभ्यो वैयक्तिकं लाभं कांक्षन्ते।

अपरञ्च—१९६७ (सप्तषष्ट्युत्तरैकोनविंशतितमात्) खीष्टवत्सरात् शनैः शनैः भारतीया राजनीतिः सिद्धान्तविहीना विद्यमाना विलोक्यते। इदानीमधि एषा दुःखस्था अस्ति यत् प्रत्येकं राजनयिकः यत्र स्वार्थपूर्तिं विलोकयति तत्रैव त्यक्तलज्जः पतति। सर्वाः राजनीतिकसंस्थाः समाजवादजनतन्त्रधर्मनिरपेक्षतादिसिद्धान्तान् उद्घोषयन्ति, परन्तु तेषां वास्तविकी निष्ठा अवसरवादसिद्धान्ते वरीवर्ति। उपर्युक्तोद्घोषाः सभ्य-विगर्हितावसरवादस्य आवरणरूपेण प्रयुज्यन्ते। एतस्मादपि अधिकतरं किं हास्या-स्पदं भविष्यति यत् उत्तरप्रदेशस्य लोकदलशासनेन आदशमकक्षाशिक्षणं संस्कृताध्या-पनस्थाने उर्दूभाषाध्यापनाज्ञा उद्घोषिता। यतोहि मुस्लिमसम्प्रदायस्य मतानि निर्वाचनसाफल्याय अपेक्ष्यन्ते। परं लोकदलस्य कार्यवाहकप्रधानमन्त्रिणश्चरणसिंहस्य विचारेण एतादृशी आज्ञा अनुचिता वर्तते। अत्रेदं वक्तव्यम्—यदि स चरणः वास्तव्येन इमं नियमम् अनुचितं मनुते, तदा उत्तरप्रदेशमुख्यमन्त्रिणा बनारसीदासेन लोकदलनिर्णयं विना, विना च विधानसभासहमतिं कथंकारम् एतन्निर्णीतम्। एतादृशस्य आचारहीनस्य सर्वकारस्य मुख्यमन्त्रिणः राजनीतिकदलस्य च नास्ति अधिकारः शासने।

इमे सामाजिका व्याधयः आर्थिकेषु राजनीतिकेषु क्षेत्रेष्वेव न सन्ति बद्ध-सीमानः। शिक्षणसंस्थासु अपि इमे रोगाः प्रदूषयाम्बभूवुः। छात्रेषु अनुशासनहीनता, अध्यापने प्रत्यहं बाधाः, परीक्षासु च बद्धसमूहं प्रतिलिपिपरम्परा, यथासमयं परीक्षा-

कार्याभावः, परीक्षकेषु च अङ्कवर्धनार्थम् अनुचिताधिकारप्रयोगः, परीक्षकानाञ्च तथैव आचरणम्, **इमे दृष्टान्ताः** (इमानि लक्षणानि) सामाजिकसंरचनायां द्रुततरगत्या प्रसरणशीलस्य कैंसररोगस्य। भविष्यतिकाले यदा इमे छात्राः सर्वेषु सङ्गठनेषु नियोक्ष्यन्ते तदा सर्वेषां सङ्गठनानां दुर्दशा अनुमातुं शक्यते।

भारतीयसमाजस्य एषा दुःखस्था अनेकेषु दार्शनिकेषु सैद्धान्तिकेषु च प्रश्नेषु विचारार्थम् अस्मान् नियुंक्ते। अस्मद् दृष्ट्या एतेषां सर्वेषां प्रश्नानां मूलभूतोऽन्यतमः प्रश्नः—'व्यष्टेः समष्टेश्च सम्बन्धानां निर्णयः' अस्ति, ततः पश्चात् तादृशानां साधनानां निर्वाचनं तदुपयोगश्च यदाधारेण वाञ्छितसम्बन्धाः स्थापितुं शक्यन्ते।

व्यष्टि समष्टिमन्तरा निरन्तरं शाश्वतं द्वन्द्वं विद्यमानमस्ति। व्यष्टेरुपरि यदि समष्टेः प्रभावो नाभविष्यत्तर्हितत्स्वार्थसिद्धो पूर्णस्वतन्त्रता अभिलिष्यत्, अपि नात्रेयं स्वतन्त्रता स्वच्छन्दता रूपं गृह्णीयात्। समष्टेः रक्षार्थं इदं आवश्यकम्, यत् **व्यक्तिः** पार्थक्येन स्वार्थसिद्धौ तत्रश्च्छन्नमतिः न स्यात्। तदैव समाजस्य सर्वाङ्गीणविकासाग्निर्ज्वलितुं शक्यते यदा सर्वाणि काष्ठखण्डानि सहैव ज्वलिष्यन्ति।—

**व्यक्तिः समष्टिमनसा यदि कर्म कुर्याद् विष्वग्विसृत्वरविकासगुणः समाजः।**
**एकेन पावककणेन कियानिहार्थः सम्भूय काष्ठनिचयैरनलः समिन्धे॥**

भ्रष्टाचारः, अनुशासनहीनता, स्ववृत्तिं प्रति निष्ठायाः अभावः, राजनीतिकं दलबदलनं (दलस्य अवदलनं), अपराधश्च, इमानि प्रमाणानि यत् व्यक्तिः स्वार्थसाधने सम्पृक्तः सन् समष्टिगतहितेषु विचारलेशशून्यः प्रमत्तः सञ्जातः। अस्यां स्थितौ समष्टिजीवनं सङ्कटापन्नं वर्तते।

अस्याः स्थितेर्व्याख्या हेतुसन्दोहैः कर्तुं शक्यते। भारतीय सामाजिकव्यवस्थायां परम्परया व्यक्तिः लघुसमष्ट्या आवद्धः आसीत्–उदाहरणतः—कुटुम्बः, परिवारः, जातिः, ग्रामश्च इमे समूहाः लघुसमष्टिरूपाः व्यष्टेराचरणं निर्मान्ति स्म, अलङ्कुर्वन्ति स्म। सत्यावश्यके नियच्छन्ति स्म। एतत्समष्टिभिः, धर्मेण च निर्दिष्टं व्यक्तेः समाजीकरणं व्यक्तेराचरणे आन्तरिकनियन्त्रणं उत्पादयति स्म। अत एव बाह्यनियन्त्रणस्य आवश्यकता स्तोकैव आसीत्।

अस्यां स्थितौ शनैःशनैः परिवर्तनं जातम्। स्वतन्त्रतालाभेन अस्याः स्थितेः क्रान्तिकारि परिवर्तनं कृतम्। १८७२ खीष्टाब्दात् **ईष्टइण्डियाकम्पनी**संस्थायाः नीत्या सम्पत्तिसम्बन्धे परिवारात् जातेः ग्रामाच्च व्यक्तिः एककः स्वीचक्रे। अस्मिन्नेव काले विशेषविवाह-अधिनियमेन विवाहविषयेऽपि व्यक्तिः परिवाराज्जातेश्च स्वतन्त्रः अकारि।

भारतस्य स्वतन्त्रतायाः अनन्तरं नूतनं संविधानं निरमायि व्यक्तिश्चास्य आधार-शिलात्वेन स्वीकृता। नूतनेन सम्विधानेन समग्रं भारतराष्ट्रम् एकसमष्टिरूपेण स्वीचक्रे, तथा च जातिवर्गप्रभृतिसमष्टीनां निषेधः कृतः। परन्तु अनुसूचितजातीनां जनजातीनां च समष्ट्यः वैधानिका अमान्यन्त।

किन्तु सम्विधानस्य इमं नियमं पालयितुमसामाजिकस्तरेण न कोऽपि प्रयासः कृतः। सम्विधानेन भारतराष्ट्रस्य एकसमष्टिरूपेण स्वीकरणे, व्यक्तिशश्च एकमात्र-समष्ट्या स्वीकरणे महद्दन्तरम् विद्यते। एतदन्तरं दूरीकर्तुं व्यक्तिचेतनायां परिवर्तन-मावश्यकम् आसीत्। एतदावश्यकपरिवर्तनस्य उद्भावने न कोऽपि प्रयत्नः कृतः। नैतिकतायामाधृतानि आचरणानि समष्टिहितार्थम्, व्यक्तिं स्वार्थत्यागार्थं प्रेरयन्ति उद्योजयन्ति च। परोक्षं च समष्ट्या बध्नन्ति। नैतिकताया आधारशिलायाम् आचरणं प्रतिष्ठापयितुं न केऽपि प्रयत्नाः अक्रियन्त। पाश्चात्यदर्शने व्यक्तेः पूर्णस्वतन्त्रताधारणया एतत्प्रयत्नाभावस्य सम्बलं प्रदाय परमोत्कर्षः प्रदत्तः। दर्शनस्यास्य चरमोत्कर्षः अमरीकादेशस्य न्यायमूर्ति **होम्ससमहोदयस्य** अनेन वक्तव्येन स्पष्टीभवति—'यदा लोकाः किमपि कार्यं चिकीर्षन्ति, तत्कार्यनिषेधश्च स्पष्टं मया सम्विधाने नोपलक्ष्यते, तदा मया कथ्यते—इदं कार्यम् अस्मभ्यं रोचेत न वा रोचेत तैः क्रियताम्, नास्ति तेन किमपि मत्प्रयोजनम्' When the People want to do Something I can't find any thing in the constitution expressly forbidding them to do, I Say whatever I like it or not Godomnit, let'em do it।

एतत् सुनिश्चितं यत् कस्मिंश्चिदपि सम्विधाने समष्टिदृष्ट्या अनुचितानां समस्ता-नाम् आचरणानां निषेधं समावेशितुं न शक्यते। यदि सम्विधानाद् अतिरिक्तानाम् आचरणानाम् उपरि प्रकारान्तरेण अङ्कुशो न भवेत् तर्हि व्यक्तिगतस्वतन्त्रता अविलम्बं स्वच्छन्दतायां परावर्तेत।

वर्तमानकाले पाश्चात्यदेशेषु स्वीकृता व्यक्तेः पूर्णस्वतन्त्रता तत्तद्देशस्य आर्थिक-विकासस्य प्रारम्भदशायां नासीत्। षोडशतमे खीष्टसम्वत्सरे **प्रोटेस्टेन्ट**धर्मेण **यूरोपीय**व्यक्तेराचरणानि नियन्त्रितानि, इदानीमपि तन्नियन्त्रितो जनः स्ववृत्यां व्यव-साये वा निष्ठापूर्वकं कार्यं करोति। आर्थिकराजनीतिके शिक्षणे संगठने च तुलनात्मक-दृष्ट्या पर्याप्तं अनुशासनम् अस्ति। क्षेत्रान्तरेषु व्यक्तेः स्वतन्त्रता-कामना देशस्य आर्थिकविकासाद् उत्पन्नसमृद्धेः उपभोग-लिप्सा एव प्रतीयते। भारते एतादृश्याः स्वतन्त्रतायाः अनुकरणं विशेषतया व्यवसाये वृत्तौ च अनुशासनहीनतायाः निष्ठा-

हीनतायाः पृष्ठभूमिरूपेण घातकम्, जनसंख्याबाहुल्याद् आर्थिकसाधनानां सीमितत्वाद् घातकतरञ्च।

प्रश्नोऽयं जागर्ति इदानीम्—यदि समष्टिरक्षार्थं सामान्यतः विशेषतश्च आर्थिक-विकासार्थं व्यक्तेरनुशासनम् आवश्यकम्, तर्हि कानि अस्य साधनानि ? ऐतिहासिक-दृष्ट्या इदं कार्यम् भारते योरोपदेशेषु च **धर्मेण** कृतम्। जापानदेशे च **मेइजीरेस्टो-रेशनशासनात्** पश्चात् १८६८ ख्रीष्टवत्सरात् परिवारेण शिक्षणसंस्थाभिश्च कृतम्। **रूसचीन**देशयोः इदमनुशासनकार्यम् "राजनीतिकशिक्षया कृतम्" इति **लेनिनः** शब्दायते। एतत्प्रतीयते यत् भारतराष्ट्रे इदं कार्यम् राजनीतिकशिक्षा कर्तुं न पार्यते, यतो हि सम्पूर्णाराजनीतिकव्यवस्था विषाक्ता विद्यते। सङ्गठितैः प्रयत्नैः परिवारेण शिक्षणसंस्थाभिश्च इदम् अनुशासनकार्यं क्रियेत चेत् सफलता लप्स्यते। सति सम्भवे धर्मोऽपि आश्रयणीयः।

• • •

# INDIVIDUAL & SOCIETY : THE BUDDHIST VIEWPOINT

PROFESSOR B. V. KISHAN

Buddhism recognises the concreteness of the world and the life of man. The words of the Buddha reflect the multi-dimensional aspects of human life within the perspective of the moral values, ideals and concepts which aim to coalesce the distortions and conflicts faced by men in history. Buddhism has stressed on the deeper bonds which link mankind together. Both on the *individual* and *social* levels the non-recognition of the unity underlying all manisfestations in nature throw the social sanity into jeopardy. Buddhist philosophy, in so far as it is near to the teaching of the Buddha inspires the individual to rise to great heights of altruism, and thus adopt a constructive role in shaping his life and society in accordance with the precepts laid down by the *Buddha*.

Man emerges as a vital entity in Buddhism. The shape and tone of his life has to be constructed and defined by the individual himself. It is true that according to the Buddhist theory the influence of past actions is strong in the makeup of man, but this does not mean that there is no scope to have redemption from the morass of suffering, evil and stagnation faced by man. The right actions can undo that which is the source of suffering and evil maintains the *Buddha*. The individual emerges supreme in the face of the heavy odds against him, due to the reason that the constituents which comprise him possess all the potentiality required to push him towards the higher success morally and also worldly. It is true that the Buddhist theory has given a most positive connotation of the moral values and has elaborately dealt with the nature and content of moral action.

But this should not be taken as indicative of any lack of positive approach towards the world and the human responsibilities which they bring forth. Moral values and ideals do not presuppose a vacuum to function without the presence of the numerous elements which formulate the totality of human life and activities. Moral theory can be exercised only in the presence of the humanity which surround man. There is no question of living the moral values if such living does not possess a

comparative significance in the face of the activities of persons which fall short of the ideals of human life which have been held as all important by the Buddha himself and also the Buddhist thinkers, down through the ages. It remains that Buddhist philosophers have developed the various aspects of the teaching of the Buddha, often losing sight of the totality and coherence of human life and its predicaments, only to give a very limited and often negative perspective of the being of man in relation to his own kind, the society and history.

*Dharma Chakra Pravartana Sūtra*, lays down the basic aspects of the teaching of the Buddha. This early sermon deals with the basic facts of life faced by all men in a most direct way. The predominance of suffering in human life is recognised by the Buddha and a way is outlined to come out of the grip of gloom and vicissitudes of life. The nature of *Dharma* is outlined by the *Buddha* and the path of righteousness is defined to those who aim at conquering the suffering. The Buddha has laid down the elements of a robust and practical ethics. It is very important to recognise the *pragmatic ethics* of Buddhism. Such ethical precepts are not meant only for the monks, but also for the people coming from all walks of life. The argument that the Buddhist philosophy is primarily other-worldly and meant for mendicants does not hold ground due to the reason that Buddhism had never been a religion, meant for persons who wanted to detach themselves from the criss-cross relations which bind individuals in manifold relations. This is exemplified by the standpoint of the Buddha that nothing can be gained by aligning with beliefs life eternalism and self-mortification. Acceptance of eternalism makes one unaware of the relevance of the surrounding world and confounds the role which the individual is duty-bound to play within it. *Self-mortification* and stress on *asceticism* is avoided, for that would hinder the growth of human personality in a meaningful way within the life situations.

The acceptance of the idea of *impermanence* does not mean that the Buddha did not establish the value and significance of the personality of man. The world may be in constant change, but the individual by treading the path of wisdom and morality can rise above the phenomenal world and be a beacon of truth, for others to follow. The transitoriness of the constituents of the personality of man ..the *Rūpa*, *Vedanā*, *Samjñana*, *Samskāra* and *Vijñāna* are recognised. yet the awakened individual rises above the transitoriness and remains the unchanging symbol of the *noble*

*values.* Actions produce the appropriate results and the law of causation should be believed, not for any metaphysical purposes but to recognise that good actions which can uplift the individual above the narrow confines of ego and self, can place the individual on a lofty Pedestal which is above the desires of the mediocre individuals. To reach the acme of the essence and spirit of the noble values may itself be regarded as a rebirth of man, which implies the death of ignoble desires and the fostering of noble values, which is like a new birth of man in the world.

The Dhamma indicate the set of all comprehending values which are expected to lead man from one level of achievement to other levels of achievement and progress. *Dhamma* in Buddhism does not mean only higher moral values but it does possess also social meaning and significance. Dhamma comprehends the entire gamut of life and also its unpredictable novel situations. The practice of Dhamma on the individual level is a clear proposition, but what is not always clear is the cumulative force created by the adoption of the principles of *Dhamma* by the individuals on the social level. Society contains the individuals as its brick and mortar and the beliefs of the individuals will determine the texture of society. The quality of the *individuals* determines the quality of the *society.* In this context that the moral values stressed by Buddhism have to be taken note of. The universalistic aspect of the noble values stressed by the *Buddha* have gained a new significance in the world of today, for it is possible that such values can only cement the fragmented humanity.

# व्यष्टि एवं समष्टि सम्बन्धी परिसंवाद-गोष्ठी का संक्षिप्त विवरण

विश्वविद्यालय-अनुदान-आयोग के आर्थिक सहयोग से सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय के श्रमणविद्यासंकायान्तर्गत बौद्धदर्शन विभाग द्वारा दिनांक १० जनवरी, १९८० से १३ जनवरी १९८० तक बौद्ध दृष्टि से **'व्यक्ति, समाज, उनका सम्बन्ध और विकास'** विषय पर एक चतुर्दिवसीय अखिल भारतीय परिसंवाद-गोष्ठी का आयोजन किया गया। गोष्ठी में **दिल्ली, लेह-लद्दाख, जयपुर, लखनऊ, कानपुर, चण्डीगढ़, राँची सोलन (हि० प्र०), नागपुर, शान्तिनिकेतन, पचमढ़ी, पूना, कुरुक्षेत्र, शिलांग (मेघालय), सागर, पटियाला, धारवाड़, वाल्टेयर, दरभंगा** आदि दूर-दूर स्थानों से डॉ० एन० के० देवराज, डॉ० धर्मेन्द्र गोयल, डॉ० शान्तिभिक्षु शास्त्री, डॉ० ए० के० सरन, डॉ० के० एन० शर्मा, डॉ० वैद्यनाथ सरस्वती, डॉ० नारायण शास्त्री द्रविड, डॉ० गोपिकामोहन भट्टाचार्य, डॉ० हर्षनारायण, डॉ० प्रतापचन्द्र, डॉ० रामचन्द्र पाण्डेय, डॉ० लालमणि जोशी, डॉ० महेश तिवारी, डॉ० सुनीति कुमार पाठक, डॉ० राजेन्द्र प्रसाद, डॉ० केवलकृष्ण मित्तल, डॉ० सिद्धेश्वर भट्ट, पं० आनन्द झा आदि दर्शन एवं समाज शास्त्र विषय के भारत प्रसिद्ध लगभग ३५ विद्वान् अपने-अपने निबन्धों के साथ उपस्थित हुए। लगभग ५० की संख्या में काशी हिन्दू विश्वविद्यालय, काशी विद्यापीठ, गांधी संस्थान, अमेरिकन लाइब्रेरी, केन्द्रीय तिब्बती शिक्षा संस्थान आदि शिक्षा संस्थाओं के सम्बद्ध विषय के स्थानीय विद्वान् प्रतिदिन प्रतिगोष्ठी में सोत्साह सम्मिलित हुए। इन विद्वानों के निबन्ध और परस्पर के उच्चस्तरीय विचार-विमर्श द्वारा न केवल उत्तम कोटि के विचार सामने आये, अपितु भारतीय दर्शन विशेषतः बौद्ध दर्शन की दृष्टि से व्यक्ति एवं समाज से सम्बद्ध वर्तमान समस्याओं के समाधान की सम्भावनाओं के कतिपय निश्चित संकेत दृष्टिगोचर हुए।

ज्ञात है कि पश्चिम के दार्शनिकों, समाज वैज्ञानिकों एवं राजनीतिशास्त्रियों ने व्यक्ति, समाज और उनके सम्बन्ध को प्रमुख विषय बनाकर प्रभूत चिन्तन किया है। चिन्तन के क्षेत्र में भारतीय मनीषियों का भी अग्रणी स्थान रहा है। यद्यपि इनके चिन्तन का प्रमुख क्षेत्र आध्यात्मिक रहा है, फिर भी उन्होंने समसामयिक युग में व्यक्ति, समाज और राज्य को अपने विशिष्ट जीवन दर्शन द्वारा प्रभावित किया है।

भारतीय दर्शनों में विशेष कर बौद्ध दर्शन ने अपने प्रारम्भिक काल से ही न केवल भारत के अपितु विश्व के अधिकांश जनजीवन को प्रभावित किया है। ऐसे महत्त्वपूर्ण दर्शन के आलोक में व्यक्ति समाज एवं उनसे सम्बद्ध प्रश्नों पर विद्वानों का बैठकर आपस में विचार-विमर्श करना प्रासंगिक, उचित एवं उपयोगी रहा।

दिनांक १० जनवरी ८० को प्रातः ९ बजे काशी विद्यापीठ के कुलपति तथा प्रसिद्ध दार्शनिक एवं समाजशास्त्री **प्रो० राजाराम शास्त्री** ने परिसंवाद-गोष्ठी का उद्घाटन किया। सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय के कुलपति विद्वन्मूर्धन्य **प्रो० बदरीनाथ शुक्ल** ने उद्घाटन समारोह की अध्यक्षता की। बौद्धदर्शन विभागाध्यक्ष **श्री रामशंकर त्रिपाठी** ने समागत विद्वानों का स्वागत किया तथा पालि विभागाध्यक्ष **प्रो० जगन्नाथ उपाध्याय** ने व्यक्ति एवं समाज से सम्बद्ध वर्तमान समस्याओं का उल्लेख करते हुए विषय प्रवर्तन किया।

बौद्ध दर्शन का प्रसार एवं परिचय विद्वानों में भी प्रायः विरल हो गया है। बौद्ध दर्शनों में व्यक्ति एवं समाज का तात्त्विक विवेचन उपलब्ध होता है, किन्तु बौद्धों की सामाजिक जीवन दृष्टि और उसका व्यक्तिजीवन के साथ सम्बन्ध का व्यावहारिक पक्ष संघ और विनय के नियमों में परिलक्षित होता है। फलतः दर्शन और विनय की दृष्टि से तीन आधारभूत निबन्ध परिसंवाद-गोष्ठी की आरम्भ तिथि से लगभग एक माह पूर्व ही विद्वानों की सेवा में प्रेषित कर दिये गये, जिससे विचार-विमर्श के द्वारा कुछ निष्कर्ष प्राप्त किये जा सकें। बौद्ध दर्शन की दृष्टि से दो तथा विनय की दृष्टि से एक निबन्ध था। **प्रो० जगन्नाथ उपाध्याय** ने 'बौद्ध दृष्टि में व्यक्ति, लोक तथा सम्बन्ध' **श्री रामशंकर त्रिपाठी** ने 'बौद्ध दृष्टि से व्यक्ति एवं समाज' तथा तिब्बती शिक्षा संस्थान के प्रधानाचार्य **प्रो० एस० रिम्पोछे** तथा वहीं के उपाचार्य **श्री सेम्पा दोर्जे** ने 'बौद्ध विनय की दृष्टि से व्यक्ति एवं समाज' विषय पर सम्मिलित निबन्ध प्रस्तुत किया। सेमिनार के द्वितीय अधिवेशन में भी ये निबन्ध प्रस्तुत किये गये जिन पर पर्याप्त चर्चा हुई।

विभिन्न बौद्ध दर्शनों, अन्य भारतीय दर्शनों एवं पाश्चात्य दर्शनों को आधार बनाकर व्यक्ति, समाज और उनके सम्बन्धों पर तुलनात्मक एवं समीक्षात्मक अध्ययन प्रस्तुत करते हुए लगभग ३० निबन्धों में दिल्ली विश्वविद्यालय के दर्शन विभागाध्यक्ष **डॉ० रामचन्द्र पाण्डेय** ने कहा कि बौद्ध शून्यवाद और वेदान्त का ब्रह्मवाद दोनों पृथक्-पृथक् व्यक्ति और समाज सम्बन्धी वर्तमान समस्या के समाधान में असमर्थ हैं। यदि किसी तरह दोनों दर्शनों को मिलाया जा सके तो वे विश्व को इस सम्बन्ध

में नया आलोक दे सकते हैं। शान्ति निकेतन के **डॉ० राजेन्द्र प्रसाद पाण्डेय** ने प्रतिपादित किया कि व्यक्ति और समष्टि को लेकर आधुनिक समाजशास्त्रियों ने जो विश्लेषण किया है, उससे बौद्धदर्शन का विश्लेषण कहीं अधिक मूलग्राही एवं सोद्देश्य है। दिल्ली विश्वविद्यालय के **डॉ० सिद्धेश्वर भट्ट** ने कहा कि बौद्धों की दृष्टि से व्यक्ति और समाज दोनों की तात्त्विक स्थिति समान है। अर्थात् दोनों व्यावहारिक संरचनाएँ हैं, फिर भी व्यक्ति प्राथमिक स्तर की तथा समाज गौण स्तर की रचना है। वहीं के **डॉ० महेश तिवारी** ने कहा कि बुद्ध की अवस्था यद्यपि व्यक्ति के स्तर की है, फिर भी उनका व्यक्तित्व समाज के साथ समरस हो गया है। इस अवस्था में व्यक्ति और समाज सम्बन्धी सारे द्वन्द्व समाप्त हो जाते हैं। वहीं के **डॉ० केवलकृष्ण मित्तल** के अनुसार व्यष्टि और समाज में बौद्ध दृष्टि से कुछ भी वैशिष्ट्य नहीं है। कुरुक्षेत्र विश्वविद्यालय के **डॉ० गोपिकामोहन भट्टाचार्य** ने कहा कि बौद्ध धर्म एवं दर्शन व्यक्ति और समाज के सम्बन्धों के प्रति सदा सतर्क रहे हैं। उनका लक्ष्य केवल निर्वाण नहीं, अपितु जनहित एवं विश्वकल्याण रहा है। सागर विश्वविद्यालय के **डॉ० प्रतापचन्द्र** का कहना था कि भारतीय विद्या के अध्येताओं का एक बड़ा वर्ग पालि-त्रिपिटक में संगृहीत समाज दर्शन परक विचारों की अनदेखी करता आया है। वैज्ञानिक इतिहास लेखक यह माँग करता है कि विविधता को एक काल्पनिक समरूपता के आवरण में छिपाने की जगह उसको सम्मानपूर्वक उचित स्थान दिया जाय। प्रारम्भिक बौद्धों ने इस समस्या पर गहराई से विचार किया है। केन्द्रीय-तिब्बती-संस्थान के प्राचार्य **प्रो० एस० रिम्पोछे** और वहीं के आचार्य **गेशे थवख्यस्** ने कहा कि आत्मा का निषेध कर बौद्धों ने व्यक्तिवाद की बुराइयों से लोक की रक्षा की तथा करुणा के द्वारा व्यक्ति का उपयोग समाज के हित में किया। इस तरह व्यक्ति और समाज में एक सामञ्जस्य उपस्थित किया। चण्डीगढ़ के **डॉ० धर्मेन्द्र गोयल** ने व्यक्ति और समाज सम्बन्धी समस्या के समाधान में बौद्धों की प्रज्ञा और करुणा के अपूर्व योगदान की चर्चा की। नागपुर के **डॉ० नारायणशास्त्री द्रविड़** ने बौद्ध दर्शन और रसेल के चिन्तन में व्यष्टि और समष्टि का स्वरूप निरूपित किया। शिलांग (मेघालय) के **डॉ० हर्षनारायण** का विचार था कि बौद्ध धर्म और दर्शन व्यक्ति की सीमा से ऊपर नहीं उठ सकता है, किन्तु उसमें समष्टिवादी परिणति की सम्भावनायें निहित हैं। मुंगेर के **प्रो० हरिशंकर सिंह** ने बताया कि माध्यमिक दर्शन में वे सूत्र हैं जो हमारी आज की समस्याओं को सुलझानें में आलोक प्रदान कर सकते हैं।

पूना के **प्रो० ए० के० सरन** काशी विद्यापीठ के **प्रो० राजाराम शास्त्री, प्रो० मुकुट विहारी लाल, प्रो० कृष्णनाथ, प्रो० रमेशचन्द्र तिवारी,** कानपुर के **श्री के० एन**

**शर्मा** आदि समाजशास्त्र के भारत प्रसिद्ध मनीषियों ने समाजशास्त्र की दृष्टि से व्यक्ति और समाज का विश्लेषण करते हुए कहा कि विश्व में व्यक्तिवादी, समाजवादी एवं समन्वयवादी तीन प्रकार की विचारधाराएँ प्रचलित हैं। प्रथम दो दृष्टियाँ एकान्त-वादी हैं। बौद्धदर्शन तीसरी विचारधारा के ज्यादा नजदीक है, किन्तु अध्यात्मवादी होने के कारण बौद्ध दृष्टि इनसे ऊपर है। इस धारा में ऐसे तत्त्व अवश्य हैं, जो मानवीय और सामाजिक समस्याओं के समाधान के नये सूत्र प्रदान कर सकते हैं। आवश्यकता है आधुनिक समाजशास्त्रियों के साथ बैठकर विचारों के आदान-प्रदान की। उन्होंने आशा व्यक्त की कि संस्कृतविश्वविद्यालय इस दिशा में पहल करेगा। राँची के **डॉ० वैद्यनाथ सरस्वती** ने मानव विज्ञान के परिप्रेक्ष्य में भारतीय परम्परागत व्यवस्था में व्यक्ति और समाज के सम्बन्धों पर प्रकाश डाला। बलिया के **डॉ० दीन-बन्धु पाण्डेय** ने भारतीय बौद्ध कला में व्यक्ति और समाज से सम्बन्धित दृष्टिकोण उप-स्थित किया। **डॉ० बी० के० राय** वाराणसी ने आधुनिक भौतिक, रासायनिक आदि विज्ञानों की दृष्टि से व्यक्ति और समाज का विश्लेषण करते हुए कहा कि भगवान् बुद्ध और उनके अनुयायियों ने अहिंसा, सेवा, करुणा आदि जिन मानवीय गुणों को प्रतिष्ठित किया उन्हीं से कल्याण की आशा है। शान्तिनिकेतन के **डॉ० सुनीति कुमार पाठक** ने बौद्धोंके ब्रह्मविहार, बोधिचित्त और ज्वलिता चाण्डाली सिद्धान्तों से वर्तमान समस्या के समाधान में योगदान की चर्चा की। वाराणसी के **श्री राधेश्यामधर द्विवेदी** ने व्यष्टि और समष्टि के सन्दर्भ में बुद्ध के स्वनियन्त्रित अध्यात्मवाद की चर्चा की। पटियाला के **डॉ० लालमणि जोशी** ने 'विमलकीर्तिनिर्देशसूत्र' के विश्लेषण के आधार पर व्यष्टिऔर समष्टि के सम्बन्धों की विशद चर्चा की। पचमढ़ी के **श्री टी० छोगडुब् शास्त्री** तथा लद्दाख के **श्री टशी पलजोर** ने महायानी दर्शन और महायानी साधना के आधार पर व्यक्ति, समाज उनके सम्बन्धों के सम्बन्ध में अपना अध्ययन प्रस्तुत किया। सोलन के **डॉ० शान्तिभिक्षु शास्त्री** ने अपने संस्कृत निबन्ध में व्यक्ति और समाज के विकास के सन्दर्भ में बौद्ध दृष्टि का विश्लेषण प्रस्तुत किया। दरभंगा के **पं० श्री आनन्द झा** ने व्यक्ति और समाज का दार्शनिक विश्लेषण करते हुए कहा कि सामाजिक विकास के लिए अहिंसा, सत्य, अस्तेय आदि गुणों के विकास की आवश्यकता है।

**निष्कर्ष**

व्यक्ति और समाज से सम्बद्ध समस्याओं के समाधान के सन्दर्भ में गोष्ठी में सम्मिलित विद्वानों की राय में बौद्ध दर्शन का मध्यममार्ग उचित समाधान प्रस्तुत कर सकता है। व्यक्तिवादी और समाजवादी दृष्टियाँ एकान्तवादी हैं। बौद्धों का मध्यममार्ग इन एकान्तदृष्टियों का निषेध करता है। उसकी दृष्टि में व्यक्ति महत्त्वहीन

